ॐस्वस्तिश्रीगणेशायनमः ॐअस्यश्रीशनिस्तोत्रमंत्रस्यकश्यपऋषिस्त्रिष्टुप्
छन्दः शौरिर्देवता शंबीजं निःशक्तिः कृष्णवर्णेतिकीलकं धर्मार्थकाममो
क्षचतुर्विधपुरुषार्थसिद्ध्यर्थेजपेविनियोगः अथन्यासः शनैश्चरायनमः
अंगुष्ठाभ्यांमंदगतयेनमः तर्जनीभ्यांअधोक्षजायनमः मध्यमाभ्यांकृष्णां
गायनमः अनामिकाभ्यांशुष्कोदरायनमः कनिष्ठिकाभ्यांछायात्मजा
यनमः करतलकरपृष्ठाभ्यांशनैश्चरायनमः हृदयेमंदगतयेनमः शिर
सेअधोक्षजायनमः शिखायैवषट् कृष्णांगायनमः कवचायहुम् शुष्को
दरायनमः नेत्रत्रयायवौषट् छायात्मजायनमः अस्त्रायफट् ॐभूर्भुवः
स्वः दिग्बंधनं अथध्यानं नीलद्युतीशूलधरंकिरीटिनं गृध्रस्थितंत्रासकरं
धनुर्द्धरं चतुर्भुजंसूर्यसुतंप्रशांतंवंदेसदाभीष्टप्रदंवरेण्यं प्रणम्यदेवदे
वेशंसर्वविघ्ननिवारणम् शनैश्चरप्रसादार्थं चिंतयामासपार्थिवः ॥२॥ रघु
वंशेषुविख्यातोराजादशरथःपुरा चक्रवर्तीसविज्ञेयः सप्तद्वीपाधिपोभ
वेत् कृत्तिकांतेशनिर्ज्ञात्वा दैवज्ञैर्ज्ञापितोहिसः रोहिणींभेदयित्वातुशनिर्या

ॐ स्वस्ति श्रीगणेशाय नमः ॥ ॐ श्रीसूर्यादिगगनचरेभ्यो नमः । नारायणं परमपूरुषमादि
देवं ज्योतिर्मयं शुभकरं च चराचरेशं । शान्तं प्रणम्य शिरसा द्विजपुंगवानां प्रश्ना
र्णवं सुगममहं प्रकरोमि शास्त्रम् १ श्रीवत्सदाससतनयं जातनयः सुविद्वान् श्री
मानुमापतिनिपतिर्यदुनाथभक्तः । वाराहताजिककुतुकं मतं समीकृत्वा रा
घवः परमशास्त्रमिदं करोमि २ अथ प्रणम्य हरिमिंदुककुब्धवक्षो ज्योति
र्विदं सकलशास्त्रकलाविदग्धं । आदृय सद्गुविहितं फलपुष्परत्नहस्तः प्रसन्न
वदनः सकृदेव पृच्छेत् ३ लग्ने चरे हि सुतलाभकर्मणास्तवर्षे नापृग्गरस्त
यागमागमबंधमोक्षाः प्रश्नुर्भवंति परचक्रमुपैति दीर्घकल्याणवृद्धिकलहो
पशमाश्च नो स्युः ४ लग्ने स्थिरे न च सुतेन रमयास्तदार्थलाभे गमागमगदबं
धबंधमोक्षाः न स्युर्न चेति परचक्रमनर्थनाशः कल्याणवृद्धिकलहोपश
मा भवंति ५ द्वंद्वोदये सुतधनाप्तिरभीष्टवस्तुप्राप्तिश्चिरेण गमनागमबं
धमोक्षाः प्रश्नुर्भवंति परचक्रमुपैत्यवीर्यं रोगी च जीवति कलिः प्रशमं तनु
भूत्वा ६ स्थिरोदये चंद्रमसि स्थिरस्थिते द्वंगेहि मार्गे द्विष्ट तनु दृष्टेपि च

मे शनिना सुव्रत ॥ ३९ ॥ वरं ब्रूहि प्रदास्यामि यत्ते मनसि वर्त्तते ॥ दशरथोवाच ॥
प्रसन्नो यदि मे सौरे वरं देहि ममेप्सितं ॥ ४० ॥ अद्य प्रभृति पिंगाक्ष पीडा देया न
कस्यचित् प्रसादं कुरु मे सौरे वरोयं मे महेप्सितं एवं श्रुत्वा न दासौरे
गृहराजो महाबलः ॥ शनिरुवाच ॥ अदेयस्तु वरोस्माकं तुष्टोहं च ददा
मि ते ॥ ४२ ॥ त्वया प्रोक्तं च मे स्तोत्रं यः पठिष्यति मानवः ॥ देवासुरमनुष्या
श्च सिद्धविद्याधरोरगाः ॥ न तेषां बाधते पीडा मत्कृता वै कदाचन ॥ मृ
त्युस्थाने चतुर्थे वा जन्मव्ययद्वितीयके ॥ गोचरे जन्मलग्ने वा दशास्वंत
र्दशासु च । यः पठेद्द्विसंध्यं वा शुचिर्भूत्वा समाहितः ॥ ४५ ॥ न तस्य बाधते पी
डा कृता वै मम निश्चितं ॥ प्रतिमां लोहजां कृत्वा मम राजन् चतुर्भुजां ॥ ४६ ॥
वरदां च धनुः शूलबाणांकितकरां शुभां ॥ अयुतमेकजाप्यं च तद्दशांशेन
होमयेत् ॥ ४७ ॥ छागमांसेश्च मांसेन पायसान्नेन भक्ष्यादि च भावितं ॥ मद्दिने च
विशेषेण स्तोत्रेणानेन पूजयेत् ॥ ४८ ॥ कृष्णैस्तिलैः शमीपत्रैः धूमाक्तैः
नीलमुत्पलैः ॥ पायसं शर्करायुक्तं घृतमिश्रं च होमयेत् ॥ ४९ ॥ ब्राह्मणान्

२८ नमो विशालनेत्राय भृङ्गोदरनिभाय च नमः स्वरूपगात्राय स्थूल
लोमाय वै नमः २९ नमो नित्यं सुधान्नाय स्वरूपाय च वै नमः ३० नमो दी
र्घाय सुशुष्काय कालदंष्ट्र नमो नमः कालाग्निरौद्ररूपाय कृशांगाय च
वै नमः नमोस्तु कोटिरूपाय दुर्निरीक्षाय वै नमः ३१ नमो घोराय रौद्रा
य भीषणाय करालिने नमो मंदगते तुभ्यं भास्करेभयदायिने ३२ सुधा
दृष्टे नमस्तेस्तु संवर्तकभयाय च नमः सर्वदेहाय नित्यं योगरता
य च ज्ञानचक्षुर्नमस्तेस्तु कश्यपात्मजसूनवे तुष्टो ददासि वै राज्यं रुष्टो ह
रसि तत्क्षणात् त्वया पुत्र नमस्तेस्तु सर्वभक्षाय वै नमः देवासुरमनुष्या
श्च पशुपक्षिसरीसृपाः ३३ त्वया विलोकिताः सर्वे दह्यमाना व्रजंति ते
ब्रह्मा शंभुर्हरिश्चैव ऋषयः सप्ततारकाः ३४ राज्यभ्रष्टाः पतंति ते
या वै दृष्ट्वावलोकिताः देशाश्च नगरग्रामा द्वीपाश्चैव नगास्तथा ३५ त्वया
वलोकिताः सर्वे नाशं यान्ति समूलतः प्रसादं कुरु मे सौरे वरदो भव भास्क
रे ३ एवं स्तुतस्तदा सौरिर्ग्रहराजो महाबलः सोमाच पार्थिवः तुष्टोहन वराजेंद्र सौ

निषण्णिम्मामानिनपेदश्वत्थसन्निधौ शनैश्चरकृता पीडा न कदा
चिभविष्यति ५९ अपमृत्युविनाशाय दुःस्वप्नोद्धरणाय च स्नान
वं तिलतैलेन शनिवारे सदा बुधः ६० तिलं वा तिलतैलं वा धान्य
माषादिकं तथा लोहं देयं च विप्राय सुवर्णेन समन्वितं ६१ एत
त्स्तोत्रं पठेद्यस्तु शृणुयाद्वा समाहितः विजयं धनमारो
ग्यं सुखमाप्नुयात् ६२ इति श्री राजा दशरथ कृत शनिस्तो
त्रं समाप्तम् शुभमस्तु ॥ ॥ ॐ अस्य श्रीमंगलस्तोत्रमंत्रस्य विरूपा
क्ष ऋषिः मंगलो देवता भुवनेश्वरी शक्तिः सकलपापक्षयार्थे ध
नदानार्थे ऋणहरणार्थे विजयपाठे विनियोगः मंगलो भूमिपुत्रश्च ऋ
णहर्ता धनप्रदः स्थिरासनो महाकायः सर्वकर्मविरोधकृत्
१ लोहितो लोहिताक्षश्च सामगानां कृपाकरः धरात्मजः
कुजो भौमो भूतिदो भूमिनंदनः २ अंगारको यमश्चैव सर्वरोगा
पहारकः वृष्टिकर्ता पहर्ता च सर्वकामफलप्रदः ३ एतानि

भोजयेत्तत्र सन्नद्धान् पायसं तैलेन वा तिलराशौ च कृसरद्वयं च
यथाविधिः ८० पूजनं चैव मंत्रेण कुंकुमाद्यं च लेपनं नीलाख्यं
कुसुमं तुलसी लाजा पुष्पादिभिः शुभैः ८१ दद्यान्मे प्रीयते यत्तु
कृष्णवस्त्रादिकं शुभं धेनुं वा वृषभं वापि सवत्सां च पयस्वि
नी ८२ एवं विशेषपूजां च मद्वारे कुरुते नृपः मंत्रोद्धारविशे
षेण स्तोत्रेणानेन पूजयेत् ८३ पूजयित्वा जपेत् स्तोत्रं भूत्वा चैव
कृतांजलिः तस्य पीडां न चैवाहं करिष्यामि कदाचन ८४ रक्ष
तेनैव प्रकारेण पीडामुक्तं जगद्भवेत् वरद्वयं च संप्राप्य राजद
शरथस्तदा ८५ मेने कृतार्थमात्मानं नमस्कृत्य शनैश्चरा
र शनैश्चरात्त्वनुज्ञातो रथमारुह्य वीर्यवान् ८६ स्वस्थानं
च गतो राजा प्राप्तकामो भवत्तदा सर्वसिद्धिमवाप्नोति सर्वत्र
विजयी भवेत् ८७ कोणस्थः पिंगलो बभ्रुः कृष्णो रौद्रो यमो
न्तकः सौरिः शनैश्चरो मंदः पिप्पलस्यामहाग्रहः ८८ एता

यथा प्रेतापृ सृजन्त्वेनी ३ भौमायनमः ओं उद्बुध्यस्वाग्ने प्रतिजागृहित्वा
मिष्टापूर्ते संसृजेथामयंच अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वे
देवायजमानश्च सीदत ४ बुधायनमः ओं बृहस्पते अतियदर्यो अ
र्हाद्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवसऋतप्रजात त
दस्मासु द्रविणं धेहि चित्रं ५ बृहस्पतयेनमः ओं अन्नात्परिस्रुतो रसं
ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः ऋतेन सत्यमिन्द्रियं वि
पानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ६ शुक्राय
नमः ओं शन्नोदेवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः
ओं शनैश्चरायनमः ७ कांडात्कांडात्प्ररोहन्ती परुषः परुषस्परि एवा
नो दूर्वे प्रतनु सहस्रेण शतेन च कन्वेनम् राहवेनमः ओं केतुं
कृण्वन्नकेतवे पेशो मर्या अपेशसे समुषद्भिरजायथाः केतवेनमः
ओं शन्न आपो धन्वन्याः शंनः सन्तु नूप्याः शंनः समुद्रिया आपः श
मु नः सन्तु कूप्याः ओं आपोहिष्ठेति मंत्रेण द्रुपदादिवेति मंत्रेण

कुजनामानि प्रातरुत्थाय यः पठेत् रक्तपुष्पैश्च गंधैश्च धूपदीपनैवे
द्यैः ४ मंगलं पूजयित्वा तु मंगलेहनि सर्वदा ऋणरेखाः प्रकर्तव्या
अंगारेण तदग्रतः ५ तांश्च प्रमार्जयेत्पश्चात् वामपादतलेन वै च
ऋणमुक्तवरो धारः शक्तिशूलगदाधरः ६ चतुर्भुजो मेषगतो वर
दश्च धरासुतः अंगारको महीपुत्रो भगवद्भक्तिवत्सलः ७ एवं कृ
तेन संदेहो ऋणाद्धित्वा धनी भवेत् भूमिपुत्रो महातेजाः सद्यो
भवति नान्यथा ८ धनार्थी ... स्मिन् गृहाणार्थं धरासुतः
इति मंगलस्तोत्रं समाप्तः शुभमस्तु ओं आकृष्णेन रजसा वर्तमानो
निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भु
वनानि पश्यन् सूर्याय नमः १ ओं इमं देवा असपत्नं सुवध्वं म
हते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय इमममुष्य पुत्र
ममुष्यै पुत्रमस्यै विश एष वोमी राजा सोमोस्माकं ब्राह्मणानां
राजा चंद्रमसे नमः ओं अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयं

नु ...